# परशुरामकल्पसूत्रे त्रैपुरसिद्धान्तम्

(श्रीविद्या-सम्प्रदाय-सिद्धान्त-कथनम्)

## त्रैपुरसिद्धान्तप्रतिपादनम्

(१) षट्त्रिंशत्तत्त्वानि विश्वम्।
(२) शरीरकञ्चकितः शिवो जीवो निष्कञ्चकः परशिवः।
(३) स्वविमर्शः पुरुषार्थः।
(४) वर्णात्मका नित्याः शब्दाः ।
(५) मन्त्राणामचिन्त्यशक्तिता।
(६) सम्प्रदायविश्वासाभ्यां सर्वसिद्धिः ।
(७) विश्वासभूयिष्ठं प्रामाण्यम्।
(८)गुरुमन्त्रदेवाऽऽत्ममनः पवनानाम् ऐक्यनिष्फालनादन्तरात्मवित्तिः।
(९) आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितं तस्याभिव्यञ्जकाः पञ्चमकाराः तैरर्चनं गुप्त्या, प्राकट्यान्निरयः।

## उपासकधर्माः

(१०) भावनादार्ढ्यादाज्ञानसिद्धिः ।
(११) सर्वदर्शनानिन्दा ।
(१२) अगणनं कस्यापि ।

(१३) सच्छिष्ये रहस्यकथनम् ।
(१४) सदा विद्याऽनुसंहतिः ।
(१५) सततं शिवतासमावेशः।
(१६) (१७) एकगुरूपास्तिरसंशयः।
(१८) सर्वत्र निष्परिग्रहता।
(१९) फलं त्यक्त्वा कर्मकरणम्। कामक्रोधलोभमोहमद- मात्सर्याविहित- हिंसास्तेयलोकविद्विष्टवर्जनम।
(२०) अनित्यकर्मलोपः।
(२१) मपञ्चकालाभेऽपि नित्यक्रमप्रत्यवमृष्टिः।
(२२) निर्भयता सर्वत्र।
(२३) सर्व वेद्यं हव्यम् इन्द्रियाणि स्रुचः शक्तयो ज्वाला: स्वात्मा शिवः पावकः स्वयमेव होता।

## त्रैपुरसिद्धान्त उपासकधर्माः

(२४) निर्विषयचिद्रिमुष्टि फलम्।
(२५) आत्मलाभान्न परं विद्यते ।
(२६) सैषा शास्त्रशैली।
(२७) वेश्या इव प्रकटा वेदादिविद्याः । सर्वेषु दर्शनेषु गुप्तेयं विद्या ।

(२८) तत्र सर्वथा मतिमान् दीक्षेत ।
(२९) न कदम्बं छिन्द्यात् ।
(३०) गिरा कालीति न वदेत् ।
(३१) वीणा-वेणु-नर्तन-गायन-गाथा-गोष्ठीषु-न-पराङ्मुखो गच्छेत्।
(३२) गायकं न निन्द्यात् ।
(३३) नेक्षुखण्डं भक्षयेत् ।
(३४) न दिवा स्मरेत् वार्तालीम्।
(३५) न जुगुप्सेत सिद्धद्रव्याणि ।
(३६) न कुर्यात् स्त्रीषु निष्ठुरताम् ।
(३७) वीरस्त्रियं न गच्छेत् ।
(३८) न तं हन्यात्।
(३९) न तद्रव्यमपहरेत् ।
(४०) नात्मेच्छया मपञ्चकमुररीकुर्यात् ।
(४१) कुलभ्रष्टैः सह नासीत ।
(४२) न बहु प्रलपेत्।
(४३) योषितं ' सम्भाषमाणामप्रति सम्भाषमाणो न गच्छेत्।
(४४) कुलपुस्तकानि गोपायेत् ।
(४५) सर्वभूतैरविरोधः ।
(४६) परिपन्थिषु निग्रहः ।
(४७) अनुग्रहः संश्रितेषु ।
(४८) गुरुवत् गुरुपुत्रकलत्रादिषु वृत्तिः ।

(४९) आदिमस्य स्वयं सेवनमागमदृष्ट्या दोषदं त्याज्यम् ।
(५०) सर्वत्र वचनपूर्वं प्रवृत्तिः ।
(५१) दशकुलवृक्षानुपप्लवः।
(५२) स्त्रीवृन्द आदिमकलश सिद्धलिङ्गिक्रीडाऽऽकुल कुमारीकुल सहकार अशोक एकतरु परेतावनिमित्तवेश्या श्यामारक्तवसनामत्तेभानां दर्शने वन्दनम्।

## श्रीविद्याषोडशीक्रमादिः

(५३) पञ्चपर्वसु विशेषार्चा।
(५४) आरम्भतरुण यौवन प्रौढतदन्तउन्मना अनवस्था उल्लासेषु प्रौढान्ताः समयाचाराः । ततः परं यथा कामी स्वैरव्यवहारेषु वीरावीरेष्वयथा मननादधःपातः ।
(५५) रक्ता त्यागविरक्ताऽऽक्रमण उदासीनाप्रलोभनवर्जनम् ।
(५६)घृणाशङ्काभयलज्जाजुगुप्साकुलजातिशीलानां क्रमेणावसादनम् ।
(५७) गुरुप्रगुरुसन्निपाते प्रगुरोः प्रथमं प्रणतिः तदग्रे तदनुरोधेन तन्नतिवर्जनम्।

(५८) अभ्यर्हितेष्वपराङ्मुख्यम् ।
(५९) मुख्यतया प्रकाश विभावना।
(६०) अधिजिगमिषा शरीरार्थासूनां गुरवे धारणम्।
(६१) एतदुक्तकरणम्।
(६२) अपरीक्षणं तद्वचने व्यवस्था ।
(६३) सर्वथा सत्यवचनम्।
(६४) परदारधनेष्वनासक्तिः।
(६५)स्वस्तुतिपरनिन्दामर्मविरुद्धवचनपरिहासधिक्कार-आक्रोशत्रासनवर्जनम्।
(६६)प्रयत्नेन विद्याऽऽराधनद्वारा पूर्णख्यातिसमावेशनेच्छा चेत्येते सामयिकाचाराः ।
(६७)परे च शास्त्रानुशिष्टाः।
(६८) अशोकपुष्पितवृक्षकोकिलमांसकुलशास्त्रपुस्तकानां दर्शने नमनम्।
(६९) न नग्नां स्त्रियमीक्षेत कुरूपां प्रकटस्तनीं । दृष्ट्वा तु विकृतां वाऽपि नोपहासं समाचरेत् । योषितामप्रियं नैव कुर्यात् कार्यं प्रियं सदा न स्वपेत् कुलवृक्षाधः तत्पत्रे नैव भोजन । वृथा छेदं न कुर्याच्च नमस्कुर्याच्च दर्शने। शपथं नैव कुर्वीत कार्ये कापि समुत्थिते ।

**(७०) नित्यं सहस्रनामपाठः।**
**(७१) दीक्षितस्य मृतस्य अन्त्येष्टिः कौलश्राद्धञ्च ।**
**(७२) इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य सर्वतः कृतकृत्यता शरीरत्यागे श्वपचगृहकाश्योर्नान्तरं जीवन्मुक्तः ।**

।। शुभम् ।।